उवाच च महाप्राज्ञः स्वरेण महता महान् । सुग्रीवं तांश्च संप्रेक्ष्य सर्वान्वानरयूथपान् ॥ ९
रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः । तस्याहमनुजो भ्राता बिभीषण इति श्रुतः ॥ १०
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् । रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ११
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् । साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १२
स च न प्रतिजग्राह रावणः कालचोदितः । उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १३
सोऽहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १४
सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं बिभीषणमुपस्थितम् ॥ १५
एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः । लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १६
रावणस्यानुजो भ्राता बिभीषण इति श्रुतः । चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ १७
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि । वानराणां च भद्रं ते परेषां च परंतप ॥ १८
अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः । शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ १९
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् । अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २०
अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान् । अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २१
मित्राटवीबलं चैव मौलं भृत्यबलं तथा । सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २२
प्रकृत्या राक्षसो ह्येष भ्राताऽमित्रस्य ते प्रभो । आगतश्च रिपोः पक्षात्कथमस्मिन्हि विश्वसेत् २३
रावणेन प्रणिहितं तमवेहि बिभीषणम् । तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २४
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमुपागतः । प्रहर्तुं मायया च्छन्नो विश्वस्ते त्वयि राघव ॥ २५
प्रविष्टः शत्रुसैन्यं हि प्राज्ञः शत्रुरतर्कितः । निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २६
वध्यतामेष दण्डेन तीव्रेण सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष बिभीषणः ॥ २७
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् २८
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः । समीपस्थानुवाचेदं हनुमत्प्रमुखान्हरीन् ॥ २९
यदुक्तं कपिराजेन रावणावरजं प्रति । वाक्यं हेतुमदर्थ्यं च भवद्भिरपि तच्छ्रुतम् ॥ ३०
सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता । समर्थेनापि संदेष्टुं शाश्वतीं भूतिमिच्छता ॥ ३१
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः । सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३२
अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव । आत्मानं सूचयन्राम पृच्छस्यस्मान्सुहृत्तया ॥ ३३
त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः । परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च ३४
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव । हेतुतो मतिसंपन्नाः समर्थाश्च पुनः पुनः ॥ ३५
इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः । बिभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३६
शत्रोः सकाशात्संप्राप्तः सर्वथा शङ्क्य एव हि । विश्वासयोग्यः सहसा न कर्तव्यो बिभीषणः
छादयित्वात्मभावं हि चरन्ति शठबुद्धयः । प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान्भवेत् ॥ ३८
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह । गुणतः संग्रहं कुर्याद्दोषतस्तु विसर्जयेत् ॥ ३९
यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् । गुणान्वापि बहूञ्ज्ञात्वा संग्रहः क्रियतां नृप ४०

---

१ अबोधयम् । २ मन्त्रः कार्याकार्यविचारः । व्यूहः सेनास्कन्दनिवेशः । नयः विचार्य निश्चितानामुपायानां तत्तद्विषये प्रयोगः । चारः गूढप्रेषणं । वानराणां परेषां राक्षसानां च मन्त्रादिषु विषये युक्तः अवहितः भवितुमर्हसि । एवं सति तव भद्रं भविष्यतीत्यर्थः । ३ चारः । ४ मित्रसंबन्धिसैन्यम् । आटविकजनरूपं सैन्यं च । ५ परंपरागतम् । ६ संदेष्टुं युक्त इति संबन्धः ।

शरभस्त्वथ निश्चित्य साध्यं वचनमब्रवीत् । क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥४१
प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना । परीक्ष्य च ततः कार्यो यथान्याय्यं परिग्रहः॥४२
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः । वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम्॥४३
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४४
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः । वाक्यं वचनसंपन्नो बभाषे हेतुमत्तरम् ॥ ४५
वचनं नाम तस्यैष रावणस्य विभीषणः । पृच्छ्यतां मधुरेणायं शनैर्नरवरेश्वर ॥ ४६
भावमस्य तु विज्ञाय ततस्त्वं करिष्यसि । यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४७
अथ संस्कारसंपन्नो हनूमान्सचिवोत्तमः । उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ४८
न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् । अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ४९
न वादान्नापि संघर्षान्नाधिक्यान्न च कामतः । वक्ष्यामि वचनं राजन्यथार्थं राम गौरवात्॥५०
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव । तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५१
ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते । सहसा विनियोगो हि दोषवान्प्रतिभाति मा॥५२
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव । अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥ ५३
अदेशकाले संप्राप्त इत्ययं यद्विभीषणः । विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥
स एष देशः कालश्च भवतीति यथातथा ॥ ५४
पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि । दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ॥
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥ ५५
अज्ञातरूपैः पुरुषैः स राजन्पृच्छ्यतामिति । यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥५६
पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान्वचः । तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम्॥५७
अशक्यः सहसा राजन्भावो वेत्तुं परस्य वै । अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम्॥५८
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता । प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥५९
अशङ्कितमतिः स्वस्थो न शठः परिसर्पति । न चास्य दुष्टा वाक्चापि तस्मान्नास्तीह संशयः ६०
आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् । बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्॥६१
देशकालोपपन्नं च कार्यं कार्यविदां वर । सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६२
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् । वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ॥ ६३
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः । यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति ॥
त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह । प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १
ममापि तु विवक्षास्ति काचित्प्रति विभीषणम्। श्रुतमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः २

१ चारं प्रेषयित्वा । २ राजकार्येषु नियोगात् । ३ साधुत्वम् । ४ चारप्रणिधानं युक्तमिति यदुक्तम् । ५ चारप्रयोजनस्य दूरतिरोहितदर्शनादेरसंभवात् चारप्रणिधानलक्षणं कारणं उपायः । न युज्यते । ६ अधमपुरुषाद्रावणादुत्तमपुरुषं भवन्तं प्राप्य विमृश्य । ७ स्वस्मिन्दोषराहित्येन विश्वासोपगतमपि । ८ अन्तर्हितस्वाभिप्रायैः परस्य गीतैः । ९ स्वोचितफलम् ।

मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥ ३
सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च । ततः शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४
सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ॥ ५
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् । को नाम स भवेत्तस्य यमेष न परित्यजेत् ॥ ६
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च । ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् ॥
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च । न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८
अस्ति सूक्ष्मतरं किंचिद्यदत्र प्रतिभाति मे । प्रत्यक्षं लौकिकं वापि विद्यते सर्वराजसु ॥ ९
अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः । व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १०
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान् । एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ११
यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च । तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु॥१२
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः । पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो बिभीषणः
अव्यग्राश्च प्रहृष्टाश्च न भविष्यन्ति संगताः । प्रणादश्च महानेष ततोऽस्य भयमागतम् ॥
इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो बिभीषणः ॥ १४
न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः । मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः॥१५
एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः । उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६
रावणेन प्रणिहितं तमवेहि बिभीषणम् । तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ १७
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः । प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ १८
लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष बिभीषणः॥१९
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥२०
सुग्रीवस्य तु तद्वाक्यं रामः श्रुत्वा विमृश्य च । ततः शुभतरं वाक्यमुवाच हरिपुंगवम् ॥२१
सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः । सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथंचन ॥ २२
पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान्हन्यामिच्छन्हरिगणेश्वर २३
श्रूयते हि कपोतेन शत्रुः शरणमागतः । अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ २४
स हि तं प्रतिजग्राह भार्याहर्तारमागतम् । कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥ २५
ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा । शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ॥२६
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् । न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥ २७
आर्तो वा यदि वा दृप्तः परेषां शरणागतः । अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना॥२८
स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति। स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितं २९
विनष्टः पश्यतस्तस्याऽरक्षिणः शरणागतः । आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३०
एवं दोषो महानत्र प्रपन्नानामरक्षणे । अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ ३१
करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् । धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदयम् ३२

१ शरणागतत्वेन । २ एतत् दुष्टस्यापि शरणागतस्य ग्रहणम् । ३ पूजितमेव । ४ किं अनेन अस्माकं किं प्रयोजनं । स किमपीत्यर्थः । ५ अत्यजन् । ६ यं बन्धुं एष व्यसने प्राप्ते न परित्यजेत सः कस्मस्य भवेत् । न कोपीत्यर्थः । ७ राक्षसराज्यार्हाः । ८ स्वकार्ये सर्वेपि पण्डिताः । ९ अधातुकत्वसिद्ध्यर्थम् ।

सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ३३
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया । विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥ ३४
रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः । प्रत्यभाषत काकुत्स्थं सौहार्देनाभिचोदितः॥ ३५
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह । यत्त्वमार्य प्रभाषेथाः सत्त्ववान्सत्पथे स्थितः ॥३६
मम चाप्यन्तरात्मायं शुद्धं वेत्ति विभीषणम् । अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः॥३७
तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव । विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः॥३८
ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ।
विभीषणेनाशु जगाम संगमं पतत्रिराजेन यथा पुरंदरः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

राघवेणाभये दत्ते संनतो रावणानुजः । विभीषणो महाप्राज्ञो भूमिं समवलोकयन् ॥
खात्पपातावनीं हृष्टो भक्तैरनुचरैः सह ॥ १
स तु रामस्य धर्मात्मा निपपात विभीषणः । पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः ॥ २
अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः । धर्मयुक्तं च युक्तं च सांप्रतं संप्रहर्षणम् ॥ ३
अनुजो रावणस्याहं तेन चाप्यवमानितः । भवन्तं सर्वभूतानां शरण्यं शरणागतः ॥ ४
परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च॥५
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् । वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ॥ ६
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा । रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८
अवध्यः सर्वभूतानां गन्धर्वासुररक्षसाम् । राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥ ९
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् । कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि॥१०
राम सेनापतिस्तस्य प्रहस्तो यदि वा श्रुतः । कैलासे येन संग्रामे माणिभद्रः पराजितः ॥ ११
बद्धगोधाङ्गुलित्राणस्त्ववध्यकवचो युधि । धनुरादाय यस्तिष्ठन्नदृश्यो भवतीन्द्रजित् ॥ १२
संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् । अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव ॥ १३
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः । अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥ १४
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् । मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥ १५
स तैस्तु सहितो राजा लोकपालानयोधयत् । सह देवैस्तु ते भग्ना रावणेन महात्मना ॥ १६
विभीषणवचः श्रुत्वा रामो दृढपराक्रमः । अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १७
यानि कर्मापदानानि रावणस्य विभीषण। आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम्॥१८
अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् । राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ १९
रसातलं वा प्रविशेत्पातालं वापि रावणः । पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ॥ २०
अहत्वा रावणं संख्ये सपुत्रबलबान्धवम् । अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे॥२१
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः । शिरसावन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ॥ २२

१ चतुर्थ्यन्तम् । २ समीचीनम् ।

राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणम् । करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम्॥२३
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् । अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २४
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् । राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २५
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् । मध्ये वानरमुख्यानां राजानं रामशासनात् ॥२६
तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः । प्रचुक्रुशुर्महात्मानं साधु साध्विति चाब्रुवन्॥२७
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् । कथं सागरमक्षोभ्यं तराम वरुणालयम् ॥ २८
सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ २९
उपायं नाधिगच्छामो यथा नदनदीपतिम् । तराम तरसा सर्वे ससैन्या वरुणालयम् ॥ ३०
एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः । समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३१
खानितः सगरेणायमप्रमेयो महोदधिः । कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः ॥ ३२
एवं बिभीषणेनोक्तो राक्षसेन विपश्चिता । आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३३
ततश्चाख्यातुमारेभे बिभीषणवचः शुभम् । सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३४
प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३५
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम् । सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह ॥३६
विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते । ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३७
सुग्रीवः पण्डितो नित्यं भवान्मन्त्रविचक्षणः । उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम्॥३८
एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ । समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ३९
किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव । बिभीषणेन यच्चोक्तमस्मिन्काले सुखावहम् ॥४०
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्वरुणालये । लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥४१
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः । अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥
यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ॥ ४२
एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः । संविवेश तदा रामो वेद्यामिव हुताशनः ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः ।

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् । ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान्१
चारो राक्षसराजस्य रावणस्य दुरात्मनः । तां दृष्ट्वा सर्वतो व्यग्रं प्रतिगम्य स राक्षसः ॥
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ २
एष वानरऋक्षौघो लङ्कां समभिवर्तते । अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ॥ ३
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ । उत्तमायुधसंपन्नौ सीतायाः पदमागतौ ॥ ४
एतौ सागरमासाद्य संनिविष्टौ महाद्युती ॥ ५
बलमाकाशमावृत्य सर्वतो दशयोजनम् । तत्त्वभूतं महाराज क्षिप्रं वेदितुमर्हसि ॥ ६
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् । उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ॥ ७
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः । उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥ ८

१ स्थानंप्रति ।

शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् । सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम ॥ ९
यथासंदेशमक्लीबं श्लक्ष्णया परया गिरा ॥ १०

त्वं वै महाराज कुलप्रसूतो महाबलश्चर्क्षरजःसुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ॥ ११

अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः । किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ १२
न हीयं हरिभिर्लङ्का शक्या प्राप्तं कथंचन । देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १३
स तथा राक्षसेन्द्रेण संदिष्टो रजनीचरः । शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १४
स गत्वा दूरमध्वानमुपर्युपरि सागरम् । संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥
सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना ॥ १५
तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः । प्रापद्यन्त दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ॥ १६
स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः । गगनाद्भूतले चाशु परिगृह्य निपातितः ॥ १७
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् । न दूतान्घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः॥
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते । अनुक्तवादी दूतः सन्स दूतो वधमर्हति ॥ १९
शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् । उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ॥ २०
स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये । अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् ॥ २१
सुग्रीव सत्त्वसंपन्न महाबलपराक्रम । किं मया खलु वक्तव्यो रावणो लोकरावणः ॥ २२

स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य चारं शुकं तूर्णमदीनसत्त्वः ॥ २३
न मेऽसि मित्रं न तथाऽनुकम्प्यो न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्धः स मेऽसि वालीव वधार्ह वध्यः ॥ २४
निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥ २५
न मोक्ष्यसे रावण राघवस्य सुरैः सहेन्द्रैरपि मूढ गुप्तः ।
अन्तर्हितः सूर्यपथं गतो वा तथैव पातालमनुप्रविष्टः ॥ २६

तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् । त्रातारमनुपश्यामि न गन्धर्वं न चासुरम् ॥ २७
अवधीर्यज्जराबृद्धमक्षमं किं जटायुषम् ॥ २८
किं नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा । हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे
महाबलं महात्मानं दुर्धर्षममरैरपि । न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान्हरिष्यति ॥ ३०
ततोऽब्रवीद्वालिसुतस्त्वङ्गदो हरिसत्तमः । नायं दूतो महाराज चारिकः प्रतिभाति मे ॥ ३१
तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता । गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते ॥ ३२
ततो राज्ञा समादिष्टाः समुत्प्लुत्य वलीमुखाः । जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ॥ ३३
शुकस्तु वानरैश्चण्डैस्तत्र तैः संप्रपीडितः । व्याक्रोशत महात्मानं रामं दशरथात्मजम् ॥
लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी ॥ ३४

१ पत्रलघुः लघुपत्रः लाघवत्र इत्यर्थः । २ किं किंवार्थम् । ३ न बुध्यसे आत्मनर्थमिति शेषः ।

यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम्। एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतं३५
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥ ३६
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् । वानरानब्रवीद्रामो मुच्यतां दूत आगतः॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः ।

ततः सागरवेलायां दर्भानास्तीर्य राघवः । अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ १
बाहुं भुजगभोगाभमुपधायारिसूदनः । जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २
वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः । भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३
चन्दनागरुभिश्चैव पुरस्तादधिवासितम् । बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४
शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा । तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् ॥ ५
संयुगे युगसंकाशं शत्रूणां शोकवर्धनम् । सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६
अस्यता च पुनः सव्यं ज्याघातविगतत्वचम् । दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥ ७
गोसहस्रप्रदातारमुपधाय महद्भुजम् । अद्य मे मरणं वाथ तरणं सागरस्य वा ॥ ८
इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् । अधिशिश्ये स विधिवत्प्रयतो नियतो मुनिः॥९
तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले । नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ॥ १०
स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः । उपासत तदा रामः सागरं सरितां पतिम् ॥ ११
न च दर्शयते मन्दस्तदा रामस्य सागरः । प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः । समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३
अवलेपः समुद्रस्य न दर्शयति यत्स्वयम् ॥ १४
प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता । असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः॥ १५
आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् । सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ॥ १६
न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः । प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि१७
अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् । निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः॥ १८
महाभोगानि मत्स्यानां करिणां च करानिह। भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण॥
सशङ्खशुक्तिकाजालं समीनमकरं शरैः । अद्य युद्धेन महता समुद्रं परिशोषये ॥ २०
क्षमया हि समायुक्तं मामयं मकरालयः । असमर्थं विजानाति धिक्क्षमामीदृशे जने ॥
न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ २१
चापमानय सौमित्रे शरांश्चाशीविषोपमान् । सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः॥२२
अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् । वेलासु कृतमर्यादं सहसोर्मिसमाकुलम्॥२३
निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् । महार्णवं क्षोभयिष्ये महादानवसंकुलम् ॥ २४
एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः । बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन्॥२५

१ सैरन्ध्रिकाणाम् । २ सव्य अप्रदक्षिण यथा भवति तथा अस्यता इपूनिक्षपता स्वेनैव हेतुः। ज्याघातेन करणेन विगतत्वच ज्याकिणाङ्कितमित्यर्थः । ३ बाणनिर्भिन्नत्वाज्जलोपरि प्लवद्भिः ।

संपीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् । मुमोच विशिखानुग्रान्वज्रानिव शतक्रतुः ॥ २६
ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः । प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥ २७
तोयवेगः समुद्रस्य सनक्रमकरो महान् । संबभूव महाघोरः समारुतरवस्तदा ॥ २८
महोर्मिमालाविततः शङ्खशुक्तिसमावृतः । सधूमपरिवृत्तोर्मिः सहसासीन्महोदधिः ॥ २९
व्यथिताः पन्नगाश्चासन्दीप्तास्या दीप्तलोचनाः । दानवाश्च महावीर्याः पातालतलवासिनः ३०
ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा । विन्ध्यमन्दरसंकाशाः समुत्पेतुः सहस्रशः ॥ ३१
आघूर्णिततरङ्गौघः संभ्रान्तोरगराक्षसः । उद्वर्तितमहाग्राहः संवृत्तः सलिलाशयः॥ ३२

ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् ।
सौमित्रिरुत्पत्य समुच्छ्वसन्तं मा मेति चोक्त्वा धनुराललम्बे ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः । अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १
शरनिर्दग्धतोयस्य परिशुष्कस्य सागर । मया शोषितसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २
मत्कार्मुकविसृष्टेन शरवर्षेण सागर । पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवंगमाः ॥ ३
विचिन्वन्नाभिजानासि पौरुषं वापि विक्रमम् । दानवालयसंतापं मत्तो नाधिगमिष्यसि ॥ ४
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् । संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५
तस्मिन्विकृष्टे सहसा राघवेण शरासने । रोदसी संपफालेव पर्वताश्च चकम्पिरे ॥ ६
तमश्च लोकमावव्रे दिशश्च न चकाशिरे । परिचुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७
तिर्यक्च सह नक्षत्रैः संगतौ चन्द्रभास्करौ । भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८
प्रचकाशे तदाकाशमुल्काशतविदीपितम् । अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९
पुस्फुरुश्च घना दिव्या दिवि मारुतपङ्क्तयः ॥ १०
बभञ्ज च तदा वृक्षाञ्जलदानुद्वहन्नपि । आरुजंश्चैव शैलाग्राञ्शिखराणि प्रभञ्जनः ॥ ११
दिविस्पृशो महामेघाः संगताः समहास्वनाः । मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ॥ १२
यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् । अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम्॥१३
शिश्यिरे चापि भूतानि संत्रस्तान्युद्विजन्ति च । संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात्।
सह भूतैः सतोयोर्मिः सनागः सहराक्षसः । सहसाभूत्ततो वेगाद्भीमवेगो महोदधिः ॥ १५
योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् । तं तदा समतिक्रान्तं नातिचक्राम राघवः ॥
समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६
ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः । उदयन्हि महाशैलान्मेरोरिव दिवाकरः ॥ १७
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत । स्निग्धवैडूर्यसंकाशो जाम्बूनदविभूषितः ॥ १८
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः । सर्वपुष्पमयीं दिव्यां शिरसा धारयन्स्रजम् ॥ १९
जातरूपमयैश्चैव तपनीयविभूषितैः । आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २०
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव । एकावलीमध्यगतं तरलं पाटलप्रभम् ॥ २१

१ तरंगविततिः । २ भिन्ने इव । ३ संप्लवादन्यत्र प्रलयं विना वेलां योजनपर्यन्तं व्यतिचक्राम । ४ समतिक्रान्तं पकायमा नातिचक्राम शस्त्रप्रयोगरूपातिक्रमं न चकार ।

विपुलेनोरसा बिभ्रत्कौस्तुभस्य सहोदरम् । आघूर्णिततरङ्गौघः कालिकानिलसंकुलः ॥ २२
उद्वर्तितमहाग्राहः संभ्रान्तोरगराक्षसः । गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः ॥ २३
सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् । अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥ २४
पृथिवी वायुराकाशमापो ज्योतिश्च राघव । स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः२५
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः । विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २६
न कामान्न च लोभाद्वा न भयात्पार्थिवात्मज । ग्राहनक्राकुलजलं स्तम्भयेयं कथंचन ॥ २७
विधास्ये राम येनापि विषहिष्ये ह्यहं तथा । ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति ॥
हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥ २८
तमब्रवीत्तदा राम उद्यतो हि नदीपते । अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम् ॥२९
रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् । महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३०
उत्तरेणावकाशोऽस्ति कश्चित्पुण्यतमो मम । द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान्३१
उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः । आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३२
तैस्तु संस्पर्शनं प्राप्तैर्न सहे पापकर्मभिः । अमोघः क्रियतां राम तत्र तेषु शरोत्तमः ॥ ३३
तस्य तद्वचनं श्रुत्वा सागरस्य स राघवः । मुमोच तं शरं दीप्तं वीरः सागरदर्शनात् ॥ ३४
तेन तन्मरुकान्तारं पृथिव्यां खलु विश्रुतम् । निपातितः शरो यत्र दीप्ताशनिसमप्रभः॥ ३५
ननाद च तदा तत्र वसुधा शल्यपीडिता । तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३६
स बभूव तदा कूपो व्रण इत्यभिविश्रुतः । सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥ ३७
अवदारणशब्दश्च दारुणः समपद्यत । तस्मात्तद्बाणपातेन त्वपः कुक्षिष्वशोषयत् ॥ ३८
विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् ॥ ३९
शोषयित्वा ततः कुक्षिं रामो दशरथात्मजः । वरं तस्मै ददौ विद्वान्मरवेऽमरविक्रमः ॥ ४०
पशव्यश्चाल्परोगश्च फलमूलरसायुतः । बहुस्नेहो बहुक्षीरसुगन्धिर्विविधौषधः ॥ ४१
एवमेतैर्गुणैर्युक्तो बहुभिः सततं मरुः । रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥ ४२
तस्मिन्दग्धे तदा कुक्षौ समुद्रः सरितां पतिः । राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४३
अयं सौम्य नलो नाम तनुजो विश्वकर्मणः । पित्रा दत्तवरः श्रीमान्प्रतिमो विश्वकर्मणा॥४४
एष सेतुं महोत्साहः करोतु मयि वानरः । तमहं धारयिष्यामि तथा ह्येष यथा पिता ॥ ४५
एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्तदा । अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः ॥ ४६
अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये । पितुः सामर्थ्यमास्थाय तत्त्वमाह महोदधिः ॥४७
दण्ड एव वरो लोके पुरुषस्येति मे मतिः । धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा॥४८
अयं हि सागरो भीमः सेतुकर्मदिदृक्षया । ददौ दण्डभयाद्गाधं राघवाय महोदधिः ॥ ४९
मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा । औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ॥ ५०
स्मारितोऽस्म्यहमेतेन तत्त्वमाह महोदधिः । न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान्॥ ५१
समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये । काममद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ५२

---

१ अलब्धप्लवः । २ अन्यथाभावः । ३ प्लवविषयः । ४ सागराभिप्रायानुसारेण । ५ व्रणमुखम् । ६ व्रणकूपः । ७ नष्टः अदर्शनं गतः । ८ गाधं गाधत्वं प्लवविषयत्वमित्यर्थः । ९ वरः मया सदृशः पुत्रस्तव भविष्यतीत्येवंरूपः ।

ततोऽतिसृष्टा रामेण सर्वतो हरियूथपाः। अभिपेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५३
ते नगाग्रगसंकाशाः शाखामृगगणर्षभाः। बभञ्जुर्वानरास्तत्र प्रचकर्षुश्च सागरम् ॥ ५४
ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः। कुटजैरर्जुनैस्तालैस्तिलकैस्तिमिशैरपि ॥ ५५
बिल्वैश्च सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः। चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥ ५६
समूलांश्च विमूलांश्च पादपान्हरिसत्तमाः। इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ॥ ५७
तालान्दाडिमगुल्मांश्च नारिकेलान्विभीतकान्। बकुलान्खदिरान्निम्बान्समाजह्रुःसमन्ततः ५८
हस्तिमात्रान्महाकायाः पाषाणांश्च महाबलाः। पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ५९
प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम्। समुत्पतितमाकाशमुपासर्पत्ततस्ततः ॥ ६०
समुद्रं क्षोभयामासुर्वानराश्च समन्ततः। सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम् ॥ ६१
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः। स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः ॥ ६२
दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥ ६३
वानराः शतशस्तत्र रामस्याज्ञापुरःसराः। मेघाभैः पर्वताग्रैश्च तृणैः काष्ठैर्बबन्धिरे ॥ ६४
पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥ ६५
पाषाणांश्च गिरिप्रख्यान्गिरीणां शिखराणि च। दृश्यन्ते परिधावन्तो गृह्य वारणसन्निभाः ६६
शिलानां क्षिप्यमाणानां शैलानां च निपात्यताम्। बभूव तुमुलः शब्दस्तदा तस्मिन्महोदधौ ६७
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश। प्रहृष्टैर्गजसंकाशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६८
द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः। कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६९
अह्ना तृतीयेन तथा योजनानि कृतानि तु। त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ७०
चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च। योजनानि महावेगैः कृतानि त्वरितैस्तु तैः ॥ ७१
पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः। योजनानि त्रयोविंशत्सुवेलमधिकृत्य वै ॥ ७२
स वानरवरः श्रीमान्विश्वकर्मात्मजो बली। बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ७३
स नलेन कृतः सेतुः सागरे मकरालये। शुशुभे सुभगः श्रीमान्स्वातीपथ इवाम्बरे ॥ ७४
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७५
दशयोजनविस्तीर्णं शतयोजनमायतम्। ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७६
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ७७
तदचिन्त्यमसह्यं च अद्भुतं रोमहर्षणम्। ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ॥ ७८
तानि कोटिसहस्राणि वानराणां महौजसाम्। बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥ ७९
विशालः सुकृतः श्रीमान्सुभूमिः सुसमाहितः। अशोभत महासेतुः सीमन्त इव सागरे ॥ ८०
ततः पारे समुद्रस्य गदापाणिर्बिभीषणः। परेषामभिघातार्थमतिष्ठत्सचिवैः सह ॥ ८१
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम्। हनुमन्तं त्वमारोह अङ्गदं चापि लक्ष्मणः ॥ ८२
अयं हि विपुलो वीर सागरो मकरालयः। वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥ ८३
अग्रतस्तस्य सैन्यस्य श्रीमान्रामः सलक्ष्मणः। जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ८४
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः। सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥ ८५
केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८६

१ आसन्निति शेषः।

घोषेण महता तस्य सिन्धोर्घोषं समुच्छ्रितम् । भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥८७
वानराणां हि सा तीर्णा वाहिनी नलसेतुना । तीरे निविविशे राज्ञो बहुमूलफलोदके ॥ ८८
तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः ।
उपेत्य रामं सहसा महर्षिभिः समभ्यषिञ्चन्सुशुभैर्जलैः पृथक् ॥ ८९
जय स्वशत्रून्नरदेव मेदिनीं ससागरां पालय शाश्वतीः समाः ।
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ ९०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ।

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः । सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥ १
परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३
वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा । पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥५
रक्तचन्दनसंकाशा सन्ध्या परमदारुणा । ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६
दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः । प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७
रजन्यामप्रकाशस्तु संतापयति चन्द्रमाः ॥ ८
कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः । ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ ९
आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १०
रजसा महता चापि नक्षत्राणि हतानि च । युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ ११
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च । शिवाश्चाप्यशिवान्नादान्नदन्ति सुमहाभयान् ।
शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः । भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १३
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् । अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १४
इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः । प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १५
सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः । प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥ १६
राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् । हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ।

सा वीरसमिती राज्ञा विरराज व्यवस्थिता । शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १
प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा । पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २
ततः शुश्रुवुराक्रुष्टं लङ्कायां काननौकसः । भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥ ३
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः । अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४
राक्षसास्तु प्लवङ्गानां शुश्रुवुश्चापि गर्जितम् । नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६

---
१ अग्निपिण्डम् ।

अत्र सा मृगशावाक्षी रावणेनोपरुध्यते । अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥
दीर्घमुष्णं च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम् । उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण । मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९
विमानैर्बहुभिर्लङ्का संकीर्णा भुवि राजते । विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ॥ १०
पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः । नानापतङ्गसंघुष्टैः फलपुष्पोपगैः शुभैः ॥ ११
पश्य मत्तविहंगानि प्रलीनभ्रमराणि च । कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥ १२
इति दाशरथी रामो लक्ष्मणं समभाषत । बलं च तद्वै विभजञ्शास्त्रदृष्टेन कर्मणा ॥ १३
शशास कपिसेनाया बलमादाय वीर्यवान् । अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः । आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १५
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः । तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वं समाश्रितः ॥ १६
मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः ॥ १७
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः । ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ॥ १८
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु । पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ १९
सुविभक्तमहाव्यूहा महावानररक्षिता । अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ॥ २०
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् । आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ॥ २१
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः ॥ २२
ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् । सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥ २३
रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः । मोचयामास तं दूतं शुकं रामस्य शासनात् ॥ २४
मोचितो रामवाक्येन वानरैश्चाभिपीडितः । शुकः परमसंत्रस्तो रक्षोधिपमुपागमत् ॥ २५
रावणः प्रहसन्नेव शुकं वाक्यमभाषत ॥ २६
किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे । कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ॥ २७
ततः स भयसंविग्नस्तथा राज्ञाभिचोदितः । वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २८
सागरस्योत्तरे तीरेऽब्रुवं ते वचनं तथा । यथासंदेशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ॥ २९
क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः । गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥ ३०
नैव संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते । प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ३१
स च हन्ता विराधस्य कबन्धस्य खरस्य च । सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३२
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् । एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ३३
ऋक्षवानरसङ्घानामनीकानि सहस्रशः । गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ॥ ३४
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च । नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३५
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु । सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ ३६
शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् । रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३७
यदि मां प्रति युध्येरन्देवगन्धर्वदानवाः । नैव सीतां प्रयच्छामि सर्वलोकभयादपि ॥ ३८
कदा नामाभिधावन्ति राघवं मामकाः शराः । वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३९
कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः । शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ४०

१ पुनः पुनः कम्पयति । २ बद्धौ । ३ पुरा आयान्ति आयास्यन्ति ।

तत्रास्य बलमादास्ये बलेन महता वृतः । ज्योतिषामिव सर्वेषां प्रभामुद्यन्दिवाकरः ॥ ४१
सागरस्येव मे वेगो मारुतस्येव मे गतिः । न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४२
न मे तूणीशयान्बाणान्सविषानिव पन्नगान् । रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ४३
न जानाति पुरा वीर्यं मम युद्धे स राघवः ॥ ४४
मम चापमयीं वीणां शरकोणैः प्रवादिताम् । ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् ॥ ४५
नाराचतलसन्नादां तां ममाहितवाहिनीम् । अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥ ४६

न वासवेनापि सहस्रचक्षुषा यथास्मि शक्यो वरुणेन वा स्वयम् ।
यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा पुनः ॥ ४७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

सबले सागरं तीर्णे रामे दशरथात्मजे । अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् । अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २
सागरे सेतुबन्धं तु न श्रद्दध्यां कथंचन । अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ । परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ४
मन्त्रिणो ये च रामस्य सुग्रीवस्य च संमताः । ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५
स च सेतुर्यथा बद्धः सागरे सलिलार्णवे । निवेशं यद्यथा तेषां वानराणां महात्मनाम् ॥ ६
रामस्य व्यवसायं च वीर्यं प्रहरणानि च । लक्ष्मणस्य च वीर्यं च तत्त्वतो ज्ञातुमर्हथः ॥ ७
कश्च सेनापतिस्तेषां वानराणां महौजसाम् । एतज्ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ । हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९
ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम् । संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १०
संस्थितं पर्वताग्रेषु निर्दरेषु गुहासु च । समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥ ११
तरमाणं च तीर्णं च तर्तुकामं च सर्वशः । निविष्टं निविशच्चैव भीमनादं महाबलम् ॥
तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ १२
तौ ददर्श महातेजाः प्रच्छन्नौ च विभीषणः । आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ ॥ १३
तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ । लङ्कायाः समनुप्राप्तौ चारौ परपुरंजय ॥ १४
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा । कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ॥ १५
आवामिहागतौ सौम्य रावणप्रहिताबुभौ । परिज्ञातुं बलं कृत्स्नं तवेदं रघुनन्दन ॥ १६
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः । अब्रवीत्प्रहसन्वाक्यं सर्वभूतेहिते रतः ॥ १७
यदि दृष्टं बलं कृत्स्नं वयं वा सुपरीक्षिताः । यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥ १८
अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः । विभीषणो वा कार्त्स्न्येन भूयः संदर्शयिष्यति ॥ १९
न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति । न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हथः ॥ २०
पृच्छमानौ विमुञ्चैतौ चारौ रात्रिंचरावुभौ । शत्रुपक्षस्य सततं विभीषणविकर्षणौ ॥ २१
प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः । वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥ २२
यद्बलं च समाश्रित्य सीतां मे हृतवानसि । तद्दर्शय यथाकामं ससैन्यः सहबान्धवः ॥ २३
श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् । राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ॥ २४

क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण । श्वः काल्ये वज्रवान्वज्रं दानवेष्विव वासवः॥२५
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ । जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् ॥
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २६
बिभीषणगृहीतौ तु वधार्हौ राक्षसेश्वर । दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥ २७
एकस्थानगता यत्र चत्वारः पुरुषर्षभाः । लोकपालोपमाः शूराः कृतास्त्रा दृढविक्रमाः ॥ २८
रामो दाशरथिः श्रीमाँल्लक्ष्मणश्च बिभीषणः । सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ २९
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् । उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः॥३०
यादृशं तस्य रामस्य रूपं प्रहरणानि च । वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३१
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी । बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥ ३२
प्रहृष्टरूपा ध्वजिनी वनौकसां महात्मनां संप्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् । निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १
यदि मामभियुञ्जीरन्देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥
त्वं तु सौम्य परित्रस्तो हरिभिर्निर्जितो भृशम् । प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥३
को हि नाम सपत्नो मां समरे जेतुमर्हति । इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४
आरुरोह ततः श्रीमान्प्रासादं हिमपाण्डरम् । बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५
ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः । पश्यमानः समुद्रं च पर्वतांश्च वनानि च ।
ददर्श पृथिवीदेशं सुसंपूर्णं प्लवङ्गमैः ॥ ६
तदपारमसङ्ख्येयं वानराणां महद्बलम् । आलोक्य रावणो राजा परिपप्रच्छ सारणम् ॥ ७
एषां वानरमुख्यानां के शूराः के महाबलाः । के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः ॥ ८
केषां शृणोति सुग्रीवः के वा यूथपयूथपाः । सारणाचक्ष्व तत्त्वेन के प्रधानाः प्लवङ्गमाः ॥९
सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः । आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तांस्तु वनौकसः॥१०
एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः । यूथपानां सहस्राणां शतेन परिवारितः ॥ ११
यस्य घोषेण महता सप्राकारा सतोरणा । लङ्का प्रवेपते सर्वा सशैलवनकानना ॥ १२
सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः । बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः ॥ १३
बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् । लङ्कामभिमुखः क्रोधादभीक्ष्णं च विजृम्भते १४
गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ॥ १५
स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः । यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश ॥१६
एष वानरराजेन सुग्रीवेणाभिषेचितः । यौवराज्येऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १७
वालिनः सदृशः पुत्रः सुग्रीवस्य सदा प्रियः । राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा॥१८
एतस्य सा मतिः सर्वा यद्दृष्टा जनकात्मजा । हनूमता वेगवता राघवस्य हितैषिणा ॥ १९

१ अन्यत्र क्षेमुम् । २ युञ्जेरन् ।

बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान् । परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः ॥ २०
अनु वालिसुतस्यापि बलेन महतावृतः । वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः ॥ २१
ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च । उत्थाय च विजृम्भन्ते क्रोधेन हरिपुङ्गवाः॥
एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः । अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ २३
य एनमनुगच्छन्ति वीराश्चन्दनवासिनः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४
श्वेतो रजतसंकाशश्चपली भीमविक्रमः । बुद्धिमान्वानरो वीरस्त्रिषु लोकेषु विश्रुतः ॥ २५
तूर्णं सुग्रीवमागम्य पुनर्गच्छति सत्वरः । विभजन्वानरीं सेनामनीकानि प्रहर्षयन् ॥ २६
यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम् । नाम्ना संकोचनो नाम नानानगयुतो गिरिः॥ २७
तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः । योऽसौ शतसहस्राणां सहस्रं परिकर्षति ॥ २८
यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः।ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः
अदीनो रोषणश्चण्डः संग्राममभिकाङ्क्षति । एषोऽप्याशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ३०
यस्त्वेष सिंहसंकाशः कपिलो दीर्घलोचनः । निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ ३१
विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् । राजन्सततमध्यास्ते रम्भो नामैष यूथपः ॥ ३२
शतं शतसहस्राणां त्रिंशच्च हरिपुङ्गवाः । यमेते वानराः शूराश्चण्डाश्चण्डपराक्रमाः ॥
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३३
यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः । न च संविजते मृत्योर्न च युद्धाद्विधावति॥ ३४
प्रकम्पते च रोषेण तिर्यक्च पुनरीक्षते । पश्यँल्लाङ्गूलमपि च क्ष्वेलते च महाबलः ॥ ३५
महाजवो वीतभयो रम्यं साल्वेयपर्वतम् । राजन्सततमध्यास्ते शरभो नाम यूथपः ॥ ३६
एतस्य बलिनः सर्वे विहारा नाम यूथपाः । राजञ्शतसहस्राणि चत्वारिंशत्तथैव च ॥ ३७
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति । मध्ये वानरवीराणां सुराणामिव वासवः ॥ ३८
भेरीणामिव सन्नादो यस्यैष श्रूयते महान् । घोषः शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम्॥ ३९
एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् । युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः॥ ४०
एनं शतसहस्राणां शतार्धं पर्युपासते । यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ४१
यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् । स्थितां तीरे समुद्रस्य द्वितीय इव सागरः॥ ४२
एष दर्दरसंकाशो विनतो नाम यूथपः । पिबंश्चरति पर्णासां नदीनामुत्तमां नदीम् ॥ ४३
षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः ॥ ४४
त्वामाह्वयति युद्धाय क्रोधनो नाम यूथपः । विक्रान्ता बलवन्तश्च यथायूथानि भागशः॥ ४५
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः । अवमत्य सदा सर्वान्वानरान्बलदर्पितान् ॥ ४६
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते । एनं शतसहस्राणि सप्ततिः पर्युपासते ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४७
एते दुष्प्रसहा घोरा बलिनः कामरूपिणः । यूथपा यूथपश्रेष्ठा एषां यूथानि भागशः ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

१ एषः एव इति च्छेदः । सन्धिरार्षः । २ रोमाणि । ३ बिभेति । ४ दर्दरो नाम गङ्गासमीपस्थः पर्वतः।

## सप्तविंशः सर्गः ।

तांस्तु तेऽहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् । राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम्॥१
स्निग्धा यस्य बहुव्यामा वाला लाङ्गूलमाश्रिताः ।
ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २
प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः । पृथिव्यां चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३
यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः ४ ॥ द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥
यूथपा हरिराजस्य किङ्कराः समुपस्थिताः । नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि॥ ५
असिताञ्जनसंकाशान्युद्धे सत्यपराक्रमान् । असंख्येयाननिर्देश्यान्परं पारमिवोदधेः ॥ ६
पर्वतेषु च ये केचिद्विषमेषु नदीषु च । एते त्वामभिवर्तन्ते राजनृक्षाः सुदारुणाः ॥ ७
एषां मध्ये स्थितो राजन्भीमाक्षो भीमदर्शनः । पर्जन्य इव जीमूतैः समन्तात्परिवारितः ॥८
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् । सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः ॥१०
स एष जाम्बवान्नाम महायूथपयूथपः । प्रक्रान्तो गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ ११
एतेन साह्यं सुमहत्कृतं शक्रस्य धीमता । दैवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १२
आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः। मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च १३
राक्षसानां च सदृशाः पिशाचानां च लोमशाः । एतस्य सैन्या बहवो विचरन्त्यग्नितेजसः१४
यं त्वेनमभिसंरब्धं प्लवमानमिव स्थितम् । प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम् ॥ १५
एष राजन्सहस्राक्षं पर्युपास्ते हरीश्वरः । बलेन बलसंपन्नो दम्भो नामैष यूथपः ॥ १६
यः स्थितं योजने शैलं गच्छन्पार्श्वेन सेवते । ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम्१७
यस्मान्न परमं रूपं चतुष्पादेषु विद्यते । श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १८
येन युद्धं पुरा दत्तं रणे शक्रस्य धीमता । पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ १९
यस्य विक्रममाणस्य शक्रस्येव पराक्रमः । एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २०
तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ॥ २१
यस्य वैश्रवणो राजा जम्बूमुपनिषेवते । यो राजा पर्वतेन्द्राणां बहुकिंनरसेविनाम् ॥ २२
विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप । तत्रैष वसति श्रीमान्बलवान्वानरर्षभः ॥ २३
युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः । वृतः कोटिसहस्रेण हरीणां समुपस्थितः ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४
यो गङ्गामनु पर्येति त्रासयन्हस्तियूथपान् । हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २५
एष यूथपतिर्नेता गच्छन्गिरिगुहाशयः । गजान्योधयते वन्यान्गिरींश्चैव महीरुहान् ॥ २६
हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु । उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥ २७
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् । एनं शतसहस्राणां सहस्रमनुवर्तते ॥ २८
वीर्यविक्रमदृप्तानां नर्दतां बलशालिनाम् । स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९
स एष दुर्धरो राजन्प्रमाथी नाम यूथपः । वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३०
अनीकमपि संरब्धं वानराणां तरस्विनाम् । उद्धूतमरुणाभासं पवनेन समन्ततः ॥
विवर्तमानं बहुधा यत्रैतद्बहुलं रजः ॥ ३१

एतेऽसितमुखा घोरा गोलाङ्गूला महाबलाः । शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् ॥ ३२
गोलाङ्गूलं महावेगं गवाक्षं नाम यूथपम् । परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा ॥ ३३
भ्रमराचरिता यत्र सर्वकालफलद्रुमाः । यं सूर्यस्तुल्यवर्णाभमनु पर्येति पर्वतम् ॥ ३४
यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः । यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः॥३५
सर्वकामफला वृक्षाः सदा फलसमन्विताः । मधूनि च महार्हाणि यस्मिन्पर्वतसत्तमे ॥ ३६
तत्रैष रमते राजन्रम्ये काञ्चनपर्वते । मुख्यो वानरमुख्यानां केसरी नाम यूथपः ॥ ३७
षष्टिर्गिरिसहस्राणां रम्याः काञ्चनपर्वताः । तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् ॥ ३८
तत्रैते कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः । निवसन्त्युत्तमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः॥३९
सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः । सर्वे वैश्वानरसमा ज्वलिताशीविषोपमाः ॥ ४०
सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसंनिभाः । महापर्वतसंकाशा महाजीमूतनिःस्वनाः ॥ ४१
वृत्तपिङ्गलरक्ताक्षा भीमभीमगतिस्वराः । मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते ॥ ४२
एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् । जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् ॥ ४३
नाम्ना पृथिव्यां विख्यातो राजञ्शतवलीति यः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ४४
विक्रान्तो बलवाञ्शूरः पौरुषे स्वे व्यवस्थितः। रामप्रियार्थं प्राणानां दयां न कुरुते हरिः॥४५
गजो गवाक्षो गवयो नलो नीलश्च वानरः । एकैक एव यूथानां कोटीभिर्दशभिर्वृतः ॥ ४६
तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः । न शक्यं ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥४७

सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् । बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥१
स्थितान्पश्यसि यानेतान्मत्तानिव महाद्विपान् । न्यग्रोधानिव गाङ्गेयान्सालान्हैमवतानिव ॥२
एते दुष्प्रसहा राजन्बलिनः कामरूपिणः । दैत्यदानवसंकाशा युद्धे देवपराक्रमाः ॥ ३
एषां कोटिसहस्राणि नव पञ्च च सप्त च । तथा शङ्खसहस्राणि तथा वृन्दशतानि च ॥ ४
एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा । हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५
यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ। मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ६
ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ । आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा ॥ ७
यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् । यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ८
एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो । एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ ९
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः। हनुमानिति विख्यातो लङ्घितो येन सागरः १०
कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः । अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ ११
उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः । त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १२
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति । इति संचिन्त्य मनसा पुरैष बलदर्पितः ॥ १३

१ प्राणेषु । २ वायुः ।

अनाधृष्यतमं देवमपि देवर्षिदानवैः । अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १४
पतितस्य कपेरस्य हनुरेका शिलातले । किंचिद्भिन्ना दृढहनोर्हनुमानेष तेन वै ॥ १५
सत्यमागमयोगेन ममैष विदितो हरिः । नास्य शक्यं बलं रूपं प्रभावो वापि भाषितुम् ॥१६
एष आशंसते लङ्कामेको मर्दितुमोजसा ॥ १७
यश्चैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः । इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥१८
यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते । यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ १९
यो भिन्द्याद्गगनं बाणैः पर्वतानपि दारयेत् । यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः॥ २०
यस्य भार्या जनस्थानात्सीता चापहृता त्वया । स एष रामस्त्वां योद्धुं राजन्समभिवर्तते॥ २१
यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः । विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २२
एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः । नये युद्धे च कुशलः सर्वशास्त्रविशारदः २३
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली । रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः २४
न ह्येष राघवस्यार्थे जीवितं परिरक्षति । एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २५
यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति । रक्षोगणपरिक्षिप्तो राजा ह्येष बिभीषणः ॥ २६
श्रीमता राजराजेन लङ्कायामभिषेचितः । त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २७
यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् । सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् ॥२८
तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च । यः कपीनतिबभ्राज हिमवानिव पर्वतान् ॥ २९
किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् । दुर्गां पर्वतदुर्गस्थां प्रधानैः सह यूथपैः ॥३०
यस्यैषा काञ्चनी माला शोभते शतपुष्करा । कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता॥
एतां च मालां तारां च कपिराज्यं च शाश्वतं । सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ३२
शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्कु इत्यभिधीयते ॥ ३३
शतं शङ्कुसहस्राणां महाशङ्कु इति स्मृतः । महाशङ्कुसहस्राणां शतं बृन्दमिति स्मृतम् ॥ ३४
शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् । महाबृन्दसहस्राणां शतं पद्ममिति स्मृतम् ॥३५
शतं पद्मसहस्राणां महापद्ममिति स्मृतम् । महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३६
शतं खर्वसहस्राणां महाखर्वमिति स्मृतम् । महाखर्वसहस्राणां समुद्रमभिधीयते ॥ ३७
शतं समुद्रसाहस्रमोघ इत्यभिधीयते । शतमोघसहस्राणां महौघ इति विश्रुतः ॥ ३८
एवं कोटिसहस्रेण शङ्कूनां च शतेन च । महाशङ्कुसहस्रेण तथा बृन्दशतेन च ॥ ३९
महाबृन्दसहस्रेण तथा पद्मशतेन च । महापद्मसहस्रेण तथा खर्वशतेन च ॥ ४०
समुद्रेण शतेनैव महौघेन तथैव च । एष कोटिमहौघेन समुद्रसदृशेन च॥ ४१
बिभीषणेन सचिवै राक्षसैः परिवारितः । सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते ॥ ४२
महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४३

इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् ।
ततः प्रयत्नः परमो विधीयतां यथा जयः स्यान्न परैः पराजयः ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

१ श्रीरामेण ।

